सुभाषितान्यर्चयता साधो सर्वात्मना त्वया ।
स्थाने खलु नियुक्तो ऽर्थः स्थाने नावेक्षितः श्रमः ॥ ७३ ॥

ततस्ततः ॥ बोधिसत्त्व उवाच ।

रथा नृपाणां मणिहेमभूषणा व्रजन्ति देहाश्च जराविरूपताम् ।
सतां तु धर्मं न जराभिवर्तते स्थिरानुरागा हि गुणेषु साधवः ॥ ७४ ॥

अमृतवर्षं खल्विदम् । अहो संतर्पिताः स्मः । ततस्ततः ॥ बोधिसत्त्व उवाच ।

नभश्च दूरे वसुधातलाच्च पारादवारं च महार्णवस्य ।
अस्ताचलेन्द्रादुदयस्ततोऽपि धर्मः सतां दूरतरे ऽसतां च ॥ ७५ ॥

अथ सौदासः प्रसादविस्मयाभ्यामावर्जितप्रेमबहुमानो बोधिसत्त्वमुवाच ।

चित्राभिधानातिशयोज्ज्वलार्था गाथास्त्वदेता मधुरा निशम्य ।
आनन्दितस्तत्प्रतिपूजनार्थं वरानहं ते चतुरो ददामि ॥ ७६ ॥

तद्वृणीष्व यद्यन्मत्तो ऽभिकाङ्क्षसीति ॥ अथैनं बोधिसत्त्वः सविस्मयबहुमान उवाच । कस्त्वं वरप्रदानस्य ।

यस्यास्ति नात्मन्यपि ते प्रभुत्वमकार्यसंरागपराजितस्य ।
स त्वं वरं दास्यसि कं परस्मै शुभप्रवृत्तेरपवृत्तभावः ॥ ७७ ॥
अहं च देहीति वरं वदेयं मनश्च दित्साशिथिलं तव स्यात् ।
तमत्ययं कः सघृणो ऽभ्युपेयादेतावदेवालमलं यतो नः ॥ ७८ ॥

अथ सौदासः किंचिद्व्रीडावनतवदनो बोधिसत्त्वमुवाच । अलमत्रभवतो मामेवं विशङ्कितुम् ।

प्राणानपि परित्यज्य दास्यामि तानहं वरान् ।
विस्रब्धं तद्वृणीष्व त्वं यद्यदिच्छसि भूमिप ॥ ७९ ॥

बोधिसत्त्व उवाच । तेन हि

सत्यव्रतो भव विसर्जय सत्त्वहिंसां
बन्दीकृतं जनमशेषमिमं विमुञ्च ।
अद्या न चैव नरवीर मनुष्यमांस-
मेतान्वराननवरांश्चतुरः प्रयच्छ ॥ ८० ॥

सौदास उवाच ।

ददामि पूर्वान्भवते वरांस्त्रीनन्यं चतुर्थं तु वरं वृणीष्व ।
अवैषि किं न त्वमिदं यथाहमीशो विरन्तुं न मनुष्यमांसात् ॥ ८१ ॥

बोधिसत्त्व उवाच । हन्त तवैतत्संवृत्तं ननूक्तं मया कस्त्वं वरप्रदानस्येति । अपि च भोः ।

सत्यव्रतत्वं च कथं स्यादहिंसकता च ते ।
अपरित्यजतो राजन्मनुष्यपिशिताशिताम् ॥ ८२ ॥

आह । ननूक्तं भवता पूर्वं दास्याम्येतानहं वरान् ।
प्राणानपि परित्यज्य तदिदं जायते ऽन्यथा ॥ ८३ ॥
अहिंसकत्वं च कुतो मांसार्थं ते घ्नतो नरान् ।
सत्येवं कतमे दत्ता भवता स्युर्वरास्त्रयः ॥ ८४ ॥

सौदास उवाच ।

त्यक्त्वा राज्यं वने क्लेशो यस्य हेतोर्धृतो मया ।
हतो धर्मः क्षता कीर्तिस्त्यक्ष्यामि तदहं कथम् ॥ ८५ ॥

बोधिसत्त्व उवाच । अत एव तद्भवांस्त्यक्तुमर्हति ।

धर्मादर्थात्सुखात्कीर्तेर्भ्रष्टो यस्य कृते भवान् ।
अनर्थायतनं तादृक्कथं न त्यक्तुमर्हसि ॥ ८६ ॥
दत्तानुशयिता चेयमनौदार्यहते जने ।
नीचता सा कथं नाम त्वामप्यभिभवेदिति ॥ ८७ ॥

तदलं ते पाप्मानमेवानुभ्रमितुम् । अवबोद्धुमर्हस्यात्मानम् । सौदासः खल्वत्रभवान् ।

वैद्येक्षितानि कुशलैरुपकल्पितानि
ग्राम्याण्यनूपजलजान्यथ जाङ्गलानि ।
मांसानि सन्ति कुरु तैर्हृदयस्य तुष्टिं
निन्दावहाद्विरम साधु मनुष्यमांसात् ॥ ८८ ॥

तूर्यस्वनात्सजलतोयदनादधीरा-
न्गीतस्वनं च निशि राज्यसुखं च तत्तत् ।
बन्धून्सुतान्परिजनं च मनोऽनुकूलं
हित्वा कथं नु रमसे ऽत्र वने विविक्ते ॥ ८९ ॥

चित्तस्य नार्हसि नरेन्द्र वशेन गन्तुं
धर्मार्थयोरनुपरोधपथं भजस्व ।
एको नृपान्युधि विजित्य समस्तसैन्या-
न्मा चित्तविग्रहविधौ परिकातरो भूः ॥ ९० ॥

लोकः परो ऽपि मनुजाधिप नन्ववेक्ष्य-
स्तस्मात्प्रियं यदहितं च न तन्निषेव्यम् ।
यत्स्यात्तु कीर्त्यनुपरोधि मनोज्ञमार्गं
तद्विप्रियं सदपि भेषजवद्भजस्व ॥ ९१ ॥

अथ सौदासः प्रसादाश्रुव्याप्तनयनो गद्गदायमानकण्ठः समभिसृत्यैव बोधिसत्त्वं पादयोः संपरिष्वज्योवाच ।

गुणकुसुमरजोभिः पुण्यगन्धैः समन्ता-
ज्जगदिदमवकीर्णं कारणे त्वद्यशोभिः ।
इति विचरति पापे मृत्युदूतोग्रवृत्तौ
त्वमिव हि क इवान्यः सानुकम्पो मयि स्यात् ॥ ९२ ॥

शास्ता गुरुश्च मम दैवतमेव च त्वं
मूर्ध्ना वचांस्यहममूनि तवार्चयामि ।

भोक्ष्ये न चैव सुतसोम मनुष्यमांसं
यन्मां यथा वदसि तच्च तथा करिष्ये ॥ ९३ ॥
नृपात्मजा यज्ञनिमित्तमाहृता मया च ये बन्धनखेदपीडिताः ।
हतत्विषः शोकपरीतमानसास्तदेहि मुञ्चाव सहैव तानपि ॥ ९४ ॥

अथ बोधिसत्त्वस्तथेत्यस्मै प्रतिश्रुत्य यत्र ते नृपसुतास्तेनावरुद्धास्तत्रैवाभिजगाम । दृष्ट्वैव च ते नृपसुताः सुतसोमं हन्त मुक्ता वयमिति परं हर्षमुपजग्मुः ।

विरेजिरे ते सुतसोमदर्शनान्नरेन्द्रपुत्राः स्फुटहासकान्तयः ।
शरन्मुखे चन्द्रकरोपबृंहिता विजृम्भमाणाः कुमुदाकरा इव ॥ ९५ ॥

अथैनानभिगम्य बोधिसत्त्वः समाश्वासयन्प्रियवचनपुरःसरं च प्रतिसंमोद्य सौदासस्याद्रोहाय शपथं कारयित्वा बन्धनाद्विमुच्य सार्धं सौदासेन तैश्च नृपतिपुत्रैरनुगम्यमानः स्वं राज्यमुपेत्य यथार्हकृतसंस्कारांस्तान्राजपुत्रान्सौदासं च स्वेषु स्वेषु राज्येषु प्रतिष्ठापयामास ॥

तदेवं श्रेयः समाधत्ते यथा तथाप्युपनतः सत्संगम इति श्रेयोऽर्थिना सज्जनसमाश्रयेण भवितव्यम् ॥ एवमसंस्तुतसुहृत्पूर्वजन्मस्वप्युपकारपरत्वाद्बुद्धो भगवानिति तथागतवर्णेऽपि वाच्यम् ॥ एवं सद्धर्मश्रवणं दोषापचयाय गुणसमाधानाय च भवतीति सद्धर्मश्रवणेऽपि वाच्यम् । श्रुतप्रशंसायामपि वाच्यम् । एवमनेकानुशंसं श्रुतमिति ॥ सत्यकथायामपि वाच्यम् । एवं [illegible] पुण्यकीर्त्याकरं सत्यवचनमित्येवं स्वप्राणसुखैश्वर्यनिरपेक्षाः सत्यमनुरक्षन्ति सत्पुरुषा इति सत्यप्रशंसायामप्युपनेयं करुणावर्णेऽपि चेति ॥

॥ इति सुतसोमजातकमेकत्रिंशत्तमम् ॥

राजलक्ष्मीरपि श्रेयोमार्गं नावृणोति संविग्नमानसानामिति संवेगपरिचयः कार्यः ॥ तद्यथानुश्रूयते । बोधिसत्त्वभूतः किलायं भग-

वान्व्याधिजरामरणप्रियविप्रयोगादिव्यसनशतोपनिपातं दुःखितमनाथमत्राणमपरिणायकं लोकमवेक्ष्य करुणया समुत्साह्यमानस्तत्परित्राणव्यवसितमतिरतिसाधुस्वभावस्तत्तत्संपादयमानो विमुखस्यासंस्तुतस्यापि च लोकस्य हितं सुखविशेषं च कदाचिदन्यतमस्मिन्राजकुले प्रजानुरागसौमुख्यादस्खलिताभिवृद्ध्या च समृद्ध्या समानतदृप्तसामन्तया चाभिव्यज्यमानमहाभाग्ये विनयश्लाघिनि जन्म प्रतिलेभे । स जायमान एव तद्राजकुलं तत्समानसुखदुःखं च पुरवरं परयाभ्युदयश्रिया संयोजयमास ।

प्रतिग्रहव्याकुलतुष्टविप्रं मदोद्धताभ्युज्ज्वलवेषभृत्यम् ।
अनेकतूर्यस्वनपूर्णकूजमानन्दनृत्तानयवृत्तभावम् ॥ १ ॥
संसक्तगीतद्रवहासनादं परस्पराश्लेषविवृत्तहर्षम् ।
नरैः प्रियाख्यानकदानतुष्टैराशास्यमानाभ्युदयं नृपस्य ॥ २ ॥
विघटितद्वारविमुक्तबन्धनं समुच्छ्रितायध्वजचित्रचत्वरम् ।
विचूर्णपुष्पासवसिक्तभूतलं बभार रम्यां पुरमुत्सवश्रियम् ॥ ३ ॥
महागृहेभ्यः प्रविकीर्यमाणैर्हिरण्यवस्त्राभरणादिवर्षैः ।
लोकं तदा व्याप्तुमिवोद्यता श्रीरुन्मत्तगङ्गाललितं चकार ॥ ४ ॥

तेन च समयेन तस्य राज्ञो जाता जाताः कुमारा म्रियन्ते स्म । स तं विधिममानुषकृतमिति मन्यमानस्तस्य तनयस्य रक्षार्थं मणिकाञ्चनरजतभक्तिचित्रे श्रीमति सर्वायसे प्रसूतिभवने भूतविद्यापरिदृष्टेन वेदविहितेन च क्रमेण विहितरक्षोघ्नप्रतीकारे समुचितैश्च कौतुकमङ्गलैः कृतस्वस्त्ययनपरिग्रहे जातकर्मादिसंस्कारविधिं संवर्धनं च कारयामास । तमपि च महासत्त्वं सत्त्वसंपत्तेः पुण्योपचयप्रभावात्सुसंविहितत्वाच्च रक्षाया नामानुषाः प्रसेहिरे ॥ स कालक्रमादवाप्तसंस्कारकर्मा श्रुताभिजनाचारमहद्भ्यो लब्धविद्वद्यशःसंमानेभ्यः प्रशमविनयमेधागुणावर्जितेभ्यो गुरुभ्यः समधिगतानेकविद्यः प्रत्य-

हृम्नापूर्यमाणमूर्तिर्यौवनकान्त्या निसर्गसिद्धेन च विनयानुरागेण परं प्रेमास्पदं स्वजनस्य जनस्य च बभूव।

असंस्तुतमसंबन्धं दूरस्थमपि सज्जनम्।
जनो ऽन्वेति सुहृत्प्रीत्या गुणश्रीस्तत्र कारणम्॥ ५॥
हासभूतेन नभसः शरद्विकचरश्मिना।
संबन्धसिद्धिर्लोकस्य का हि चन्द्रमसा सह॥ ६॥

अथ स महासत्त्वः पुण्यप्रभावसुखोपनतैर्दिव्यकल्पैरनल्पैरपि च विषयैरुपलाल्यमानः स्नेहबहुमानसुमुखेन च पित्रा विश्वासनिर्विशङ्कं दृश्यमानः कदाचित्स्वस्मिन्पुरवरे प्रविततरमणीयशोभां कालक्रमोपनतां कौमुदीविभूतिं दिदृक्षुः कृताभ्यनुज्ञः पित्रा काञ्चनमणिरजतभक्तिचित्रालंकारं समुच्छ्रितनानाविधरागप्रचलितोज्ज्वलपताकध्वजं हैमभाण्डाभ्यलंकृतविनीतचतुरतुरंगं दक्षदाक्षिण्यनिपुणशुचिविनीतधीरसारथिं चित्रोज्ज्वलवेषप्रहरणावरणानुयात्रं रथवरमधिरुह्य मनोज्ञतूर्यस्वनपुरःसरस्तत्पुरवरमनुविचरंस्तद्दर्शनाक्षिप्तहृदयस्य कौतूहललोलचक्षुषः स्तुतिसभाजनाञ्जलिप्रग्रहप्रणामाशीर्वचनप्रयोगसव्यापारस्योत्सवरम्यतरवेषरचनस्य पौरजानपदस्य समुदयशोभामालोक्य लब्धप्रहर्षावकाशे ऽपि मनसि कृतसंवेगपरिचयत्वात्पूर्वजन्मसु स्मृतिं प्रतिलेभे।

कृपणा बत लोकस्य चलत्वविरसा स्थितिः।
यदियं कौमुदीलक्ष्मीः स्मर्तव्यैव भविष्यति॥ ७॥

एवंविधायां च जगत्प्रवृत्तावहो यथा निर्भयता जनानाम्।
यन्मृत्युनाधिष्ठितसर्वमार्गा निःसंभ्रमा हर्षमनुभ्रमन्ति॥ ८॥
अवार्यवीर्येष्वरिषु स्थितेषु जिघांसया व्याधिजरान्तकेषु।
अवश्यगम्ये परलोकदुर्गे हर्षावकाशो ऽत्र सचेतसः कः॥ ९॥

स्वनानुकृत्येव महार्णवानां संरम्भरौद्राणि जलानि कृत्वा ।
मेघास्तडिद्भासुरहेममालाः संभूय भूयो विलयं व्रजन्ति ॥ १० ॥
तटैः समं तद्विनिबद्धमूलान्हृत्वा तरूँल्लब्धजवैः पयोभिः ।
भवन्ति भूयः सरितः क्रमेण शोकोपतापादिव दीनरूपाः ॥ ११ ॥
हृत्वापि शृङ्गाणि महीधराणां वेगेन वृन्दानि च तोयदानाम् ।
विघूर्ण्य चोद्वर्त्य च सागराम्भः प्रयाति नाशं पवनप्रभावः ॥ १२ ॥
दीप्तोद्धतार्चिर्विकसत्स्फुलिङ्गः संक्षिप्य कक्षं क्षयमेति वह्निः ।
क्रमेण शोभाश्च वनान्तराणामुद्यन्ति भूयश्च तिरोभवन्ति ॥ १३ ॥
कः संप्रयोगो न वियोगनिष्ठः काः संपदो या न विपत्परैति ।
जगत्प्रवृत्ताविति चञ्चलायामप्रत्यवेक्ष्यैव जनस्य हर्षः ॥ १४ ॥

इति स परिगणयन्महात्मा संवेगाद्व्यावृत्तप्रमोदोद्भवेन मनसा रमणीयेष्वपि पुरवरविभूषार्थमभिप्रसारिषु लोकचित्तेष्वविषज्यमानबुद्धिः क्रमेण स्वभवनमनुप्राप्तमेवात्मानमपश्यत्तदभिवृद्धसंवेगश्च विषयसुखेष्वनास्थो धर्म एकः शरणमिति तत्प्रतिपत्तिनिश्चितमतिर्यथाप्रस्तावमभिगम्य राजानं कृताञ्जलिस्तपोवनगमनायानुज्ञामयाचत ।

प्रव्रज्यासंश्रयात्कर्तुमिच्छामि हितमात्मनः ।
कृतां तत्राभ्यनुज्ञां च त्वयानुग्रहपद्धतिम् ॥ १५ ॥

तच्छ्रुत्वा प्रियतनयः स तस्य राजा
दिग्धेन द्विरद इवेषुणाभिविद्धः ।
गम्भीरो ऽप्युदधिरिवानिलावधूत-
स्तच्छोकव्यथितमनाः समाचकम्पे ॥ १६ ॥

निवारयिष्यन्नथ तं स राजा स्नेहात्परिष्वज्य सबाष्पकण्ठः ।
उवाच कस्मात्सहसैव तात संत्यक्तुमस्मान्मतिमित्यकार्षीः ॥ १७ ॥

त्वदप्रियेणात्मविनाशहेतुः केनायमित्याकलितः कृतान्तः ।
शोकाश्रुपर्याकुललोचनानि भवन्तु कस्य स्वजनाननानि ॥ १८ ॥
अथापि किंचित्परिशङ्कितं वा मयि व्यलीकं समुपश्रुतं वा ।
तद्ब्रूहि यावद्विरमामि तस्मात्पश्यामि न त्वात्मनि किंचिदीदृक् ॥ १९ ॥

बोधिसत्त्व उवाच ।

इत्यभिस्नेहसुमुखे व्यलीकं नाम किं त्वयि ।
विप्रियेण समर्थः स्यान्मामासादयितुं च कः ॥ २० ॥

अथ किं तर्हि नः परित्यक्तुमिच्छसीति चाभिहितः साश्रुनयनेन राज्ञा स महासत्त्वस्तमुवाच । मृत्युभयात् । पश्यतु देवः ।

यामेव रात्रिं प्रथमामुपैति गर्भे निवासं नरवीर लोकः ।
ततः प्रभृत्यस्खलितप्रयाणः स प्रत्यहं मृत्युसमीपमेति ॥ २१ ॥
नीतौ सुयुक्तो ऽपि बले स्थितो ऽपि नात्येति कश्चिन्मरणं जरां वा ।
उपद्रुतं सर्वमितीदमाभ्यां धर्मार्थमस्माद्वनमाश्रयिष्ये ॥ २२ ॥

व्यूढान्युदीर्णनरवाजिरथद्विपानि
सैन्यानि दर्परभसाः क्षितिपा जयन्ति ।
जेतुं कृतान्तरिपुमेकमपि त्वशक्ता-
स्तन्मे मतिर्भवति धर्ममभिप्रपत्तुम् ॥ २३ ॥
दृष्टाश्वकुञ्जरपदातिरथैरनीकै-
र्गुप्ता विमोक्षमुपयान्ति नृपा द्विषद्भ्यः ।
सार्धं बलैरतिबलस्य तु मृत्युशत्रो-
र्मन्वादयो ऽपि विवशा वशमभ्युपेताः ॥ २४ ॥
संचूर्ण्य दन्तमुसलैः पुरगोपुराणि
मत्ता द्विपा युधि रथांश्च नरान्द्विपांश्च ।
नैवान्तकं प्रतिमुखाभिगतं नुदन्ति
वप्रान्तलब्धविजयैरपि तैर्विषाणैः ॥ २५ ॥

दृढचित्रवर्मकवचावरणान्युधि दारयन्त्यपि विदूरचरान् ।
इषुभिस्तदस्त्रकुशला द्विषतश्चिरवैरिणं न तु कृतान्तमरिम् ॥ २६ ॥

सिंहा विकर्तनकरैर्नखरैर्द्विपानां
कुम्भाग्रमग्नशिखरैः प्रशमय्य तेजः ।
भित्त्वैव च श्रुतमनांसि रवैः परेषां
मृत्युं समेत्य हतदर्पबलाः स्वपन्ति ॥ २७ ॥

दोषानुरूपं प्रणयन्ति दण्डं कृतापराधेषु नृपाः परेषु ।
महापराधे यदि मृत्युशत्रौ न दण्डनीतिप्रवणा भवन्ति ॥ २८ ॥

नृपाश्च सामादिभिरप्युपायैः कृतापराधं वशमानयन्ति ।
रौद्रश्चिराभ्यासदृढावलेपो मृत्युः पुनर्नानुनयादिसाध्यः ॥ २९ ॥

क्रोधानलज्वलितघोरविषाग्निगर्भै-
र्दंष्ट्राङ्कुरैरभिदशन्ति नरान्भुजंगाः ।
दंष्टव्ययत्नविधुरास्तु भवन्ति मृत्यौ
वध्ये ऽपि नित्यमपकारविधानदक्षे ॥ ३० ॥

दष्टस्य कोपरभसैरपि पन्नगैश्च
मन्त्रैर्विषं प्रशमयन्त्यगदैश्च वैद्याः ।
आशीविषस्त्वतिविषो ऽयमरिष्टदंष्ट्रो
मन्त्रागदादिभिरसाध्यबलः कृतान्तः ॥ ३१ ॥

पक्षानिलैर्लुडितमीनकुलं व्युदस्य
मेघौघभीमरसितं जलमर्णवेभ्यः ।
सर्पान्हरन्ति विततग्रहणाः सुपर्णा
मृत्युं पुनः प्रमथितुं न तथोत्सहन्ते ॥ ३२ ॥

भीतद्रुतानपि जवातिशयेन जित्वा
संसाद्य चैकभुजवज्रविलासवृत्त्या ।

व्याघ्राः पिबन्ति रुधिराणि वनमृगाणां
नैवंप्रवृत्तिपटवस्तु भवन्ति मृत्यौ ॥ ३३ ॥
दंष्ट्राकरालमपि नाम मृगः समेत्य
वैयाघ्रमाननमुपैति पुनर्विमोक्षम्।
मृत्योर्मुखं तु पृथुरोगजरार्तिदंष्ट्रं
प्राप्तस्य कस्य च पुनः शिवतातिरस्ति ॥ ३४ ॥

पिबन्ति नृणां विकृतोग्रविग्रहा सहौजसायूंषि दृढग्रहा ग्रहाः।
भवन्ति तु प्रस्तुतमृत्युविग्रहा विपन्नदर्पोत्कटतापरिग्रहाः ॥ ३५ ॥
पूजारतद्रोहकृते ऽभ्युपेतान्ग्रहान्नियच्छन्ति च सिद्धविद्याः।
तपोबलस्वस्त्ययनौषधैश्च मृत्युग्रहस्त्वप्रतिवार्य एव ॥ ३६ ॥
मायाविधिज्ञाश्च महासमाजे जनस्य चक्षूंषि विमोहयन्ति।
को ऽपि प्रभावस्त्वयमन्तकस्य यन्नाम्यते तैरपि नास्य चक्षुः ॥ ३७ ॥

हत्वा विषाणि च तपोबलसिद्धमन्त्रा
व्याधीन्नृणामुपशमय्य च वैद्यवर्याः।
धन्वन्तरिप्रभृतयो ऽपि गता विनाशं
धर्माय मे नमति तेन मतिर्वनान्ते ॥ ३८ ॥
आविर्भवन्ति च पुनश्च तिरोभवन्ति
गच्छन्ति वानिलपथेन महीं विशन्ति।
विद्याधरा विविधमन्त्रबलप्रभावा
मृत्युं समेत्य तु भवन्ति हतप्रभावाः ॥ ३९ ॥
दृप्तानपि प्रतिनुदन्त्यसुरान्सुरेन्द्रा
दृप्तानपि प्रतिनुदन्त्यसुराः सुरांश्च।
मानाधिरूढमतिभिः समुदीर्णसैन्यै-
स्तैः संहतैरपि तु मृत्युरजय्य एव ॥ ४० ॥

इमामवेत्याप्रतिवार्यरौद्रतां कृतान्तशत्रोर्भवने न मे मतिः ।
न मन्युना स्नेहपरिक्षयेण वा प्रयामि धर्माय तु निश्चितो वनम् ॥४१॥

राजोवाच । अथ वने तव क आश्वास एवमप्रतिक्रिये मृत्युभये सति धर्मपरिग्रहे च ।

किं त्वा वने न समुपैष्यति मृत्युशत्रु-
धर्मे स्थिताः किमृषयो न वने विनष्टाः ।
सर्वत्र नाम नियतः क्रम एष तत्र
को ऽर्थो विहाय भवनं वनसंश्रयेण ॥ ४२ ॥

बोधिसत्त्व उवाच ।

कामं स्थितेषु भवने च वने च मृत्यु-
र्धर्मात्मकेषु विगुणेषु च तुल्यवृत्तिः ।
धर्मात्मनां भवति न त्वनुतापहेतु-
र्धर्मश्च नाम वन एव सुखं प्रपत्तुम् ॥ ४३ ॥

पश्यतु देवः ।

प्रमादमदकन्दर्पलोभद्वेषास्पदे गृहे ।
तद्विरुद्धस्य धर्मस्य को ऽवकाशपरिग्रहः ॥ ४४ ॥

विकृष्यमाणो बहुभिः कुकर्मभिः परिग्रहोपार्जनरक्षणाकुलः ।
अशान्तचेता व्यसनोदयागमैः कदा गृहस्थः शममार्गमेष्यति ॥ ४५ ॥
वने तु संत्यक्तकुकार्यविस्तरः परिग्रहक्लेशविवर्जितः सुखी ।
शमैककार्यः परितुष्टमानसः सुखं च धर्मं च यशांसि चार्छति ॥ ४६ ॥

धर्मश्च रक्षति नरं न धनं बलं वा
धर्मः सुखाय महते न विभूतिसिद्धिः ।
धर्मात्मनश्च मुदमेव करोति मृत्यु-
र्नह्यस्ति दुर्गतिभयं निरतस्य धर्मे ॥ ४७ ॥

क्रियाविशेषश्च यथा व्यवस्थितः शुभस्य पापस्य च भिन्नलक्षणः।
तथा विपाको ऽप्यशुभस्य दुर्गतिश्चितस्य धर्मस्य सुखाश्रया गतिः॥

इत्यनुनीय स महात्मा पितरं कृताभ्यनुज्ञः पित्रा तृणवदपास्य राज्यलक्ष्मीं तपोवनाश्रयं चकार। तत्र च ध्यानान्यप्रमाणानि चोत्पाद्य तेषु च प्रतिष्ठाप्य लोकं ब्रह्मलोकमधिरुरोह॥

तदेवं संविग्नमनसां राजलक्ष्मीरपि श्रेयोमार्गं नावृणोतीति संवेगपरिचयः कार्यः। मरणसंज्ञावर्णे ऽपि वाच्यम्। एवमाशुमरणसंज्ञा संवेगाय भवतीति॥ तथा मरणानुस्मृतिवर्णे ऽनित्यताकथायामप्युपनेयम्। एवमनित्याः सर्वसंस्कारा इति॥ तथा सर्वलोके ऽनभिरतिसंज्ञायाम्। एवमनाश्वासिकं संस्कृतमिति॥ एवमत्राणो ऽयमसहायश्च लोक इत्येवमपि वाच्यम्॥ एवं वने धर्मः सुखं प्रतिपत्तुं न गेह इत्येवमप्युन्नेयम्॥

॥ इत्ययोगृहजातकं द्वात्रिंशत्तमम्॥

सति क्षन्तव्ये क्षमा स्यान्नासतीत्यपकारिणमपि साधवो लाभमिव बहुमन्यन्ते॥ तद्यथानुश्रूयते। बोधिसत्त्वः किलान्यतमस्मिन्नरण्यप्रदेशे पङ्कसंपर्कात्परुषवपुर्नीलमेघविच्छेद इव पादचारी वनमहिषवृषो बभूव। स तस्यां दुर्लभधर्मसंज्ञायां संमोहबहुलायामपि तिर्यग्गतौ वर्तमानः पटुविज्ञानत्वान्न धर्मचर्यानिरुद्योगमतिर्बभूव।

चिरानुवृत्त्येव निबद्धभावा न तं कदाचित्करुणा मुमोच।
को ऽपि प्रभावः स तु कर्मणो वा तस्यैव वा यत्स तथा बभूव॥१॥
अतश्च नूनं भगवानवोचदचिन्त्यतां कर्मविपाकयुक्तेः।
कृपात्मकः सन्नपि यत्स भेजे तिर्यग्गतिं तत्र च धर्मसंज्ञाम्॥२॥
विना न कर्मास्ति गतिप्रबन्धः शुभं न चानिष्टविपाकमस्ति।
स धर्मसंज्ञी ऽपि तु कर्मलेशांस्तांस्तान्समासाद्य तथा तथासीत्॥३॥

अथान्यतमो दुष्टवानरस्तस्य कालान्तराभिव्यक्तां प्रकृतिभद्रतां दयानुवृत्त्या च विगतक्रोधसंरम्भतामवेत्य नास्माद्भयमस्तीति तं महासत्त्वं तेन तेन विहिंसाक्रमेण भृशतरमबाधत ।

दयामृदुषु दुर्जनः पटुतरावलेपोद्भवः
परां व्रजति विक्रियां नहि भयं ततः पश्यति ।
यतस्तु भयशङ्कया सुकृशयापि संस्पृश्यते
विनीत इव नीचकैश्चरति तत्र शान्तोद्भवः ॥ ४ ॥

स कदाचित्तस्य महासत्त्वस्य विस्रब्धप्रसुप्तस्य निद्रावशाद्वा प्रचलायतः सहसैवोपरि निपतति स्म । द्रुममिव कदाचिदेनमधिरुह्य भृशं संचालयामास । क्षुधितस्यापि कदाचिदस्य मार्गमावृत्य व्यतिष्ठत । काष्ठेणाप्येनमेकदा श्रवणयोर्घट्टयामास । सलिलावगाहनसमुत्सुकस्याप्यस्य कदाचिच्छिरः समभिरुह्य पाणिभ्यां नयने समाववे । अप्येनमधिरुह्य समुद्यतदण्डः प्रसह्यैव वाहयन्यमस्य लीलामनुचकार । बोधिसत्त्वो ऽपि महासत्त्वः सर्वं तदस्याविनयचेष्टितमुपकारमिव मन्यमानो निःसंक्षोभसंरम्भमन्युर्मर्षयामास ।

स्वभाव एव पापानां विनयोन्मार्गसंश्रयः ।
अभ्यासात्तच्च च सतामुपकार इव क्षमा ॥ ५ ॥

अथ किलान्यतमो यक्षस्तमस्य परिभवममृष्यमाणो भावं वा जिज्ञासयमानस्तस्य महासत्त्वस्य तेन दुष्टकपिना वाह्यमानं तं महिषवृषभं मार्गे स्थित्वेदमुवाच । मा तावद्भोः । किं परिक्रीतो ऽस्यनेन दुष्टकपिना । अथ द्यूते पराजित उताहो भयमस्मात्किंचिदाशङ्कसे । उताहो बलमात्मगतं नावैषि । यदेवमनेन परिभूय वाह्यसे । ननु भोः ।

वेगाविद्धं त्वद्विषाणाग्रवज्रं वज्रं भिन्द्याद्वज्रवद्वा नगेन्द्रान् ।
पादाश्चेमे रोषसंरम्भमुक्ता मज्जेयुस्ते पङ्कवच्छैलपृष्ठे ॥ ६ ॥

इदं च शैलोपमसंहतस्थिरं समग्रशोभं बलसंपदा वपुः।
स्वभावसौजस्कनिरीक्षितोर्जितं दुरासदं केसरिणो ऽपि ते भवेत्॥ ७॥
मथान धृत्वा तदिमं क्षुरेण वा विषाणकोट्या मदमस्य वोद्धर।
किमस्य जाल्मस्य कपेरशक्तवत्प्रबाधनादुःखमिदं तितिक्षसे॥ ८॥
असज्जनः कुत्र यथा चिकित्स्यते गुणानुवृत्त्या सुखशीलसौम्यया।
कटूष्णरूक्षाणि हि यत्र सिद्धये कफात्मको रोग इव प्रसर्पति॥ ९॥

अथ बोधिसत्त्वस्तं यक्षमवेक्षमाणः क्षमापक्षपतितमरूक्षाक्षरमित्युवाच।

अवैम्येनं चलं नूनं सदा चाविनये रतम्।
अत एव मया त्वस्य युक्तं मर्षयितुं ननु॥ १०॥
प्रतिकर्तुमशक्तस्य क्षमा का हि बलीयसि।
विनयाचारधीरेषु क्षन्तव्यं किं च साधुषु॥ ११॥
शक्त एव तितिक्षेत दुर्बलस्खलितं यतः।
वरं परिभवस्तस्मान्न गुणानां पराभवः॥ १२॥
असत्क्रिया हीनबलाच्च नाम निर्देशकालः परमो गुणानाम्।
गुणप्रियस्तत्र किमित्यपेक्ष्य स्वधैर्यभेदाय पराक्रमेत॥ १३॥
नित्यं क्षमायाश्च ननु क्षमायाः कालः परायत्ततया दुरापः।
परेण तस्मिन्नुपपादिते च तत्रैव कोपप्रणयक्रमः कः॥ १४॥
स्वां धर्मपीडामविचिन्त्य यो ऽयं मत्पापशुद्ध्यर्थमिव प्रवृत्तः।
न चेत्क्षमामप्यहमत्र कुर्यामन्यः कृतघ्नो बत कीदृशः स्यात्॥ १५॥

यक्ष उवाच। तेन हि न त्वमस्याः कदाचित्प्रबाधनाया मोक्ष्यसे।

गुणेष्वबहुमानस्य दुर्जनस्याविनीतताम्।
क्षमानिभृत्यमत्यक्त्वा कः संकोचयितुं प्रभुः॥ १६॥

बोधिसत्त्व उवाच।

परस्य पीडाप्रणयेन यत्सुखं निवारणं स्यादसुखोदयस्य वा ।
सुखार्थिनस्तन्न निषेवितुं क्षमं न तद्विपाको हि सुखप्रसिद्धये ॥ १७ ॥
क्षमाश्रयादेवमसौ मयार्थतः प्रबोध्यमानो यदि नावगच्छति ।
निवारयिष्यन्ति त एनमुत्पथादमर्षिणो यानयमभ्युपैष्यति ॥ १८ ॥
असत्क्रियां प्राप्य च तद्विधाज्जनान्न मादृशे ऽप्येवमसौ करिष्यति ।
न लब्धदोषो हि पुनस्तथाचरेदतश्च मुक्तिर्मम सा भविष्यति ॥ १९ ॥

अथ यक्षस्तं महासत्त्वं प्रसादविस्मयबहुमानावर्जितमतिः साधु साध्विति सशिरःप्रकम्पाङ्गुलिविक्षेपमभिसंराध्य तत्तत्प्रियमुवाच ।

कुतस्तिरश्चामियमीदृशी स्थितिर्गुणेष्वसौ चादरविस्तरः कुतः ।
कयापि बुद्ध्या त्विदमास्थितो वपुस्तपोवने को ऽपि भवांस्तपस्यति ॥

इत्येनमभिप्रशस्य तं चास्य दुष्टवानरं पृष्ठादवधूय समादिश्य चास्य रक्षाविधानं तत्रैवान्तर्दधे ॥

तदेवं सति क्षन्तव्ये क्षमा स्यान्नासतीत्यपकारिणमपि साधवो लाभमिव बहुमन्यन्ते । इति क्षान्तिकथायां वाच्यम् ॥ एवं तिर्यग्गतानां बोधिसत्त्वानां प्रतिसंख्यानसौष्ठवं दृष्टम् । को नाम मनुष्यभूतः प्रव्रजितप्रतिज्ञो वा तद्विकलः शोभेत । इत्येवमपि वाच्यम् ॥ तथागतवर्णे सत्कृत्य धर्मश्रवणे चेति ॥

॥ इति महिषजातकं त्रयस्त्रिंशत्तमम् ॥

प्रोत्साह्यमानो ऽपि साधुर्नालं पापे प्रवर्तितुमनभ्यासात् ॥ तद्यथानुश्रूयते । बोधिसत्त्वः किलान्यतमस्मिन्वनप्रदेशे नानाविधरागरुचिरचित्रपत्त्रः शतपत्त्रो बभूव । करुणापरिचयाच्च तदवस्थो ऽपि न प्राणिहिंसाकलुषां शतपत्त्रवृत्तिमनुववर्त ।

बालैः प्रवालैः स महीरुहाणां पुष्पाधिवासैर्मधुभिश्च हृद्यैः ।
फलैश्च नानारसगन्धवर्णैः संतोषवृत्तिं बिभरांचकार ॥ १ ॥

धर्मं परेभ्यः प्रवदन्यथार्हमार्तान्यथाशक्ति समुद्धरंश्च ।
निवारयंश्चाविनयादनार्याननुज्ञावयामास परार्थचर्याम् ॥ २ ॥

इति परिपाल्यमानस्तेन महासत्त्वेन तस्मिन्वनप्रदेशे सत्त्वकायः साचार्यक इव बन्धुमानिव सवैद्य इव राजन्वानिव सुखमभ्यवर्धत ।

दयामहत्त्वात्परिपाल्यमानो वृद्धिं यथासौ गुणतो जगाम ।
स सत्त्वकायो ऽपि तथैव तेन संरक्ष्यमाणो गुणवृद्धिमाप ॥ ३ ॥

अथ कदाचित्स महासत्त्वः सत्त्वानुकम्पया वनान्तराणि समनुविचरंस्तीव्रवेदनाभिभवाद्विचेष्टमानं दिग्धविद्धमिवान्यतमस्मिन्वनप्रदेशे रेणुसंपर्कव्याकुलमलिनकेसरसटं सिंहं ददर्श । समभिगम्य चैनं करुणया परिचोद्यमानः पप्रच्छ । किमिदं मृगराज बाढं खल्वकल्यशरीरं त्वां पश्यामि ।

द्विपेषु दर्पातिरसानुवृत्त्या जवप्रसङ्गादथवा मृगेषु ।
कृतं तवास्वास्थ्यमिदं श्रमेण व्याधेषुणा वा रुजया कयाचित् ॥ ४ ॥
तद्ब्रूहि वाच्यं मयि चेदिदं ते यदेव वा कृत्यमिहोच्यतां तत् ।
ममास्ति या मित्रगता च शक्तिस्तत्साध्यसौख्यस्य भवान्सुखी च ॥ ५ ॥

सिंह उवाच । साधो पक्षिवर न मे श्रमजातमिदमस्वास्थ्यं रुजया व्याधेषुणा वा । इदं त्वस्थिशकलं गलान्तरे विलग्नं शल्यमिव मां भृशं दुनोति । नह्येनच्छक्नोम्यभ्यवहर्तुमुद्गरितुं वा । तदेष कालः सुहृदाम् । यथेदानीं जानासि तथा मां सुखिनं कुरुष्वेति ॥ अथ बोधिसत्त्वः पटुविज्ञानत्वाद्विचिन्त्य शल्योद्धरणोपायं तद्वदनविष्कम्भप्रमाणं काष्ठमादाय तं सिंहमुवाच । या ते शक्तिस्तया सम्यक्तावत्स्वमुखं निर्व्यादेहीति । स तथा चकार ॥ अथ बोधिसत्त्वस्तदस्य काष्ठं दन्तपाल्योरन्तरे सम्यग्निवेश्य प्रविश्य चास्य गलमूलं तत्तिर्यगवस्थितमस्थिशकलं वदनाग्रेणाभिहत्यैकस्मिन्प्रदेशे समुत्पादितशै-

थिल्यमितरस्मिन्परिगृह्य पर्यन्ते विचकर्ष । निर्गच्छन्नेव तत्तस्य वदनविष्कम्भणकाष्ठं निपातयमास ।

सुदृष्टकर्मा निपुणो ऽपि शल्यहृन्न तत्प्रयत्नादपि शल्यमुद्धरेत् ।
यदुज्जहारानभियोगसिद्धया स मेधया जन्मशतानुबद्धया ॥ ६ ॥
उद्धृत्य शल्येन सहैव तस्य दुःखं च तत्संजनितां शुचं च ।
प्रीतः स शल्योद्धरणाद्यथासीत्प्रीतः सशल्योद्धरणात्तथासीत् ॥ ७ ॥

धर्मता ह्येषा सज्जनस्य ।

प्रसाध्य सौख्यं व्यसनं निवर्त्य वा सहापि दुःखेन परस्य सज्जनः ।
उपैति तां प्रीतिविशेषसंपदं न यां स्वसौख्येषु सुखागतेष्वपि ॥ ८ ॥

इति स महासत्त्वस्तस्य तद्दुःखमुपशमय्य प्रीतहृदयस्तमामन्त्र्य सिंहं प्रतिनन्दितस्तेन यथेष्टं जगाम ॥ अथ स कदाचित्प्रविततरुचिरचित्रपत्त्रः शतपत्त्रः परिभ्रमन्किंचित्क्वचित्तद्विधमाहारजातमनासाद्य क्षुदग्निपरिगततनुस्तमेव सिंहमचिरहतस्य हरिणतरुणस्य मांसमुपभुञ्जानं तद्रुधिरानुरञ्जितवदननखरकेसराग्रं संध्याप्रभासमालब्धं शरन्मेघविच्छेदमिव ददर्श ।

कृतोपकारो ऽपि तु न प्रसेहे वक्तुं स याञ्चाविरसाक्षरं तम् ।
विशारदस्यापि हि तस्य लज्जा तत्कालमौनव्रतमादिदेश ॥ ९ ॥
कार्यानुरोधात्तु तथापि तस्य चक्षुष्पथे ह्रीविधुरं चचार ।
स चानुपश्यन्नपि तं दुरात्मा [illegible] तस्य ॥ १० ॥
शिलातले बीजमिव प्रकीर्णं हुतं च शान्तोष्मणि भस्मपुञ्जे ।
समप्रकारं फलयोगकाले कृतं कृतघ्ने विदुले च पुष्पम् ॥ ११ ॥

अथ बोधिसत्त्वो नूनमयं मां न प्रत्यभिजानीत इति निर्विशङ्कतरः समभिगम्यैनमर्थिवृत्त्या प्रयुक्तयुक्ताशीर्वादः संविभागमयाचत ।

पथ्यमस्तु मृगेन्द्राय विक्रमार्जितवृत्तये ।
अर्थिसंमानमिच्छामि त्वद्यशःपुण्यसाधनम् ॥ १२ ॥

इत्याशीर्वादमधुरमप्युच्यमानो ऽथ सिंहः क्रौर्यमात्सर्यपरिचयादनुचितार्यवृत्तिः कोपाग्निदीप्तयातिपिङ्गलया दिधक्षन्निव विवर्तितया दृष्ट्या बोधिसत्त्वमीक्षमाण उवाच । मा तावद्भोः ।

दयाक्लैब्यं न यो वेद खादन्विस्फुरतो मृगान् ।
प्रविश्य तस्य मे वक्त्रं यज्जीवसि न तद्बहु ॥ १३ ॥
मां पुनः परिभूयैवमासादयसि याच्ञया ।
जीवितेन नु खिन्नो ऽसि परं लोकं दिदृक्षसे ॥ १४ ॥

अथ बोधिसत्त्वस्तेन तस्य रूक्षाक्षरक्रमेण प्रत्याख्यानवचसा समुपजातव्रीडस्तत्रैव नभः समुत्पपात । पक्षिणो वयमित्यर्थतः पक्षविस्फारणशब्देनैनमुक्त्वा प्रचक्राम ॥ अथान्यतमा वनदेवता तस्य तमसत्कारमसहमाना धैर्यप्रयामजिज्ञासया वा समुत्पत्य तं महासत्त्वमुवाच । पक्षिवर कस्मादिममसत्कारमस्य दुरात्मनः कृतोपकारः सन्संविद्यमानायां शक्तावपि मर्षयसि । को ऽर्थः कृतघ्नेनानेनैवमुपेक्षितेन ।

शक्तस्त्वमस्य नयने वदनाभिघाता-
द्विस्फूर्जितः प्रमथितुं बलशालिनो ऽपि ।
दंष्ट्रान्तरस्थमपि चामिषमस्य हर्तुं
तन्मृष्यते किमयमस्य बलावलेपः ॥ १५ ॥

अथ बोधिसत्त्वस्तथाप्यसत्कारविप्रकृतः प्रोत्साह्यमानो ऽपि तया वनदेवतया स्वां प्रकृतिभद्रतां प्रदर्शयन्नुवाच । अलमलमनेन क्रमेण । नैष मार्गो ऽस्मद्विधानाम् ।

आर्ते प्रवृत्तिः साधूनां कृपया न तु लिप्सया ।
तामवैतु परो मा वा तत्र कोपस्य को विधिः ॥ १६ ॥
वञ्चना सा च तस्यैव यन्न वेत्ति कृतं परः ।
को हि प्रत्युपकारार्थी तस्य भूयः करिष्यति ॥ १७ ॥

उपकर्ता तु धर्मेण परतस्तत्फलेन च ।
योगमायाति नियमादिहापि यशसः श्रिया ॥ १८ ॥
कृतश्चेद्धर्म इत्येव कस्तत्रानुशयः पुनः ।
अथ प्रत्युपकारार्थमृणदानं न तत्कृतम् ॥ १९ ॥
उपकृतं किल वेत्ति न मे परस्तदपकारमिति प्रकरोति यः ।
ननु विशोध्य गुणैः स यशस्तनुं द्विरदवृत्तिमभिप्रतिपद्यते ॥ २० ॥
न वेत्ति चेदुपकृतमातुरः परो न योक्ष्यते ऽपि स गुणकान्तया श्रिया ।
सचेतसः पुनरथ को भवेत्क्रमः समुच्छ्रितं प्रमथितुमात्मनो यशः ॥
इदं त्वत्र मे युक्तरूपं प्रतिभाति ।
यस्मिन्साधूपचीर्णे ऽपि मित्रधर्मो न लभ्यते ।
अनिष्ठुरमसंरब्धमपयायाच्छनैस्ततः ॥ २२ ॥

अथ सा देवता तत्सुभाषितप्रसादितमनाः साधु साध्विति पुनरुक्तमभिप्रशस्य तत्तत्प्रियमुवाच ।

ऋते जटावल्कलधारणश्रमाद्भवानृषिस्त्वं विदितार्यतिर्यतिः ।
न वेषमात्रं हि मुनित्वसिद्धये गुणैरुपेतस्त्विह तत्त्वतो मुनिः ॥ २३ ॥

इत्यभिलक्ष्य प्रतिपूज्यैनं तत्रैवान्तर्दधे ॥

तदेवं प्रोत्साह्यमानो ऽपि साधुर्नालं पापे प्रवर्तितुमनभ्यासादिति सज्जनप्रशंसायां वाच्यम् ॥ एवं क्षान्तिकथायामप्युपनेयम् । एवं क्षमापरिचयान्न वैरबहुलो भवति । नावद्यबहुलो बहुजनप्रियो मनोज्ञश्चेति ॥ एवं प्रतिसंख्यानबहुलाः स्वां गुणशोभामनुरक्षन्ति पण्डिता इति प्रतिसंख्यानवर्णे वाच्यम् ॥ तथागतमाहात्म्ये च भद्रप्रकृत्यभ्यासवर्णे च । एवं भद्रप्रकृतिरभ्यस्ता तिर्यग्गतानामपि न निवर्तत इति ॥

॥ इति शतपत्रजातकं चतुस्त्रिंशत्तमम् ॥

॥ कृतिरियमार्यशूरपादानाम् ॥

# APPENDIX.

---

अनेकबुद्धविशेषेण भगवता कच्छपभूतो मारस्य हस्तगतो वशगतो पञ्जलगतो मुक्तः । अन्यदापि बुद्धविशे(षे)ण एतस्य मारस्य गतो वशगतो करण्डगतो मुक्तः ॥ भूतपूर्वं हि भुवः अतीतमध्वानं नगरे वाराणसी काशिजनपदे पारिपाडीका नाम नदी तस्य कूले अपरमालाकारस्य वनमालमसौ दानि मालाकाला मालस्यैव तं वनं मालाकाल आगत्वा पुष्पाणि उज्जरिय पुष्पकलण्डकमादाय मालाकारणतो निर्धावति । ग्रामाभिमुखो च प्रस्थितो ततः च नदीतो कच्छपो उद्धरित्वा गोमयं भक्षयति तस्य मालाकारस्य अविदूरे सो तं मालाकारेण दृष्ट ॥ तस्य उतदभूषि शोभणं मम अयं अथ कच्छपो ओलंको भविष्यति । तद्यथानुश्रूयते बोधिसत्वः करुणातिशयपरित्यचितमपि परहितसुखोपवादनपरः पुण्यं प्रतिपदमुद्भावयन्दानमदसंयमादिभिः कदाचिच्छक्रो देवेन्द्रो बभूव ॥ तेन दानि पुष्पकलण्डं एकान्ते स्थपित्वा सो कच्छपो गृहीतो । सो तं तत्र पुष्पकलण्डं प्रक्षिप्य (या)ति । तदा सो तं मानुषिकाय वाचाय आह ॥

प्राणेनमस्मिं यदि मान्सयोगा इमामहं कर्दमसो च मुक्षित्ते ।

अनेकतीव्रव्यसनानि तं च ।

सुरेन्द्र[ल]देवा भुवि कण्डरे वा निर्धौतगात्रं उदके सुसिक्ताः ॥

इमाहं कर्दममुक्तितो ततः मयं तं पुष्पं कर्दमेन विनासिष्यति । अत्र मे उदके धोवित्वा करण्डे प्रक्षिपतः तदेते पुष्पां न विनश्यन्ति ॥ तदा मालाकारस्य पश्यति शोभनो खल्वयं कच्छपो मानुषि-

काये वाचाये कच्छपो गच्छाहि तं अत्र उदके धोवामि। ततो एष पुष्पाणि न विनाशिष्यति। कर्दमेन मातापैतृकविषये शुण्ठिकपंचमानि च अंगानि प्रसारेत्वा तस्य मालाकारहस्तातो भ्रष्टो। तत्र उदके वुद्गताये नदीये अविदूरे त्वातं मुडित्वा तं मालाकारं वाचाये भाषति। तीरमये पारिपाचिका कृषकारणा च मे कालेन शक्तितो कर्दमकृतोस्मि पालिके धोविपान पैलाय प्रक्षिप्तः॥ अथ खलु महात्मः स मालाकारः कच्छपमेतदुवाच। बहुकामये सन्धित सुराज्ञा त्रिगन्धो बहुको समागतः। तत्र च तं भद्रकच्छप करण्डमालकृता तहिं तत्र रमिष्यतीव॥ अथ खलु महात्मानः स कच्छपं तं मालाकारं गाथाये अध्यभाषे॥

बहुकालं सन्धिता सुराज्ञा त्रिगणो बहुको समागतः।
मत्तो प्रलापेसि मालिक तैल भुंजिथ भद्रकच्छपं।

तदुपश्रुत्य शक्रो देवेन्द्रः परमविस्मितमनाः साक्षादभिसंराध्य यत्त्युवाच॥

कच्छपैव खल्वेष महानुभावः कूर्मेन्द्र स ह्यतिशयप्रभावः।
आवर्जिता यत्कलशा इवेमे क्षरन्ति रम्यस्तनिताः पयोदाः।
महत्प्रमादस्खलितं त्विदं मे यन्नाम कृत्येषु भवद्विधानां
लोकाद्यमभ्युद्यतमानसानां व्यापादयोगा न समभ्युपैमि॥

इत्येवं कच्छप प्रियवचनैः संराध्य मालाकारहस्तातो मुक्तः तदाप्यहमेतस्य मालाकारस्य हस्तातो बुद्धिविशेषेण मुक्तरिति॥

इति श्रीजातकमालायां कच्छपजातकं नाम सप्तादशो ऽध्यायः॥ १७॥

---

# VARIOUS READINGS.

Page 1.

Line 13. A चन्द्राभिभं.—16. All दीप्ति.—All वत्सर.—

Page 2.

Line 1. B कालुन्य —All निष्यन्दे°, equally good.—17. MSS निवृत्य.—

Page 3.

Line 2. MSS लोक.—7. MSS विनिस्पन्द, but वि erased in B.—11. All भत्सय°.—23. All पदन्यास°.—

Page 4.

Line 19. A श्रद्धायुतं, B श्रद्धायत, P श्रद्धापतं.

Page 5.

Line 3. MSS दृष्टगुणो.—20. P कटुङ्कता, equally good.—

Page 6.

Line 9. All वाच्यमेव.—After 11. इति wanting in B. P has इति श्रीजातकमालायां व्याघ्रीजातकं प्रथमो ऽध्यायः, which formula recurs at the end of each following Jātaka, *mut. mut.*—

Page 7.

Line 20. MSS °भवदतिस°.—

Page 8.

Line 1. A रत्नप्रभासिनि.—10. A, P विश्लिष्यमाणपुटासु; in B the words वि° till °पुटेषु omitted. My reading conjectural.—21. All विमर्ष°.—

Page 9.

Line 22. MSS विमथ्यता°.—26. All अपेक्षते.—

Page 10.

Line 22. A on the margin °मवमत्य तां वा पाठः. P °प्ता नृपतितां वदमत्य.—

Page 11.

Line 8. A याचकमभि° —

Page 12.

Line 2. MSS सोपचार°.—5. All व for वि.—14. MSS व्रजेच्च —

Page 13.

Line 6. MSS नभस्थलात्.—16. A मे, P मो for नो —17. All एवं तु.—21. A मन्द only once.—MSS °यातिः.—24. MSS प्रमुख्यस्य —25. All आत्मोपनायिकं, cp. Pāli *upanāyika.*—

Page 15.

Line 19. A वागत्याद°, B वाग्नत्याद°, P वागत्याद°.—

Page 16.

Line 18. A, B निषित्ताः, P निवित्ताः.—24. B °वृत्तिष्वपिमुखः, P °वृत्तिष्वविमुखः. —24. MSS परिपालना°, not faulty, but ambiguous.—25. All °गुणा° and °भिमुख ॥.—

Page 18.

Line 1. All इदं for इमं.—10. दानं added by me.—22. MSS °क्षेत्रे.—

Page 19.

Line 7. All प्रीति°.—9. विचार my reading for विचाल of the MSS.—12. A स त्वर्षि°.—13. A, B स्नानानु°, P स्नानाता°.—22. Anusvāra of गम्भीरं added by me.—25. All पिण्डपात्रं.—

Page 20.

Line 6. All पिण्डपात्रं.—A, P विनिसृत्य.—9. MSS °रोचे —11. All दिशन्ति —12. A शवत्, B शतत् for शरत् —14. P °प्रविष्टः.—

Page 21.

Line 1. MSS यच्छान्ति°.—2. I have left the reading प्रयास of the MSS, though I suspect that the word intended is प्रयाम.—7. A, B सतु, P सुस्तु.—A, B प्रसह्लादवि°, P प्रसह्लादभि°.—14. All एनां.—20. MSS सन्मान°.—

Page 22.

Line 4. स before विद्यु° added by me.—13. All ज्ञानविस्म°.—

Page 23.

Line 11. B on the margin and A, P रज्ज्वा दा°.—

Page 24.

Line 13. A अञ्जना°, B अञ्जना°, P अंजना°.—

Page 25.

Line 2. MSS स्वत्यस्तुहर्षन्तु.—A, B लभेत्. P केन निदानसुखोदयं.—4. All प्रवृत्ति.—9. A, B सपत्र, P संपत्र.—11. A, B सत्गान, P सन्गान.—All काम्यया.—

Page 26.

Line 8. MSS यं विदधाति.—

Page 27.

Line 19. All °वदानेन.—20. B first hand जम्भित.—Read with the MSS शिष्यसुखाः.—22. All यः for ये.—23. MSS °माननावरूढ°.—

Page 28.

Line 3. MSS °ज्ञानत्वाविन°.—5. A, P गुणवोधिनि.—6. A किम्वित; B, P किम्वत; for my reading cp. Çatapatha-Brāhm. 1, 1, 1, 8.—

Page 29.

Line 5. All °शासनीं.—15. MSS विमपन्; cp. above at p. 8, l. 21.—23. All प्रीति°.—24. A °शयस्त°, B, P °शयः त°.—All हृदयः and °जम्भितः.—

Page 30.

Line 2. MSS वितस्तरुः.—13. MSS घर्माक्रमा°.—19. For नु a second hand r. in A and B has त्र; P त्र नु.—All ह्लादयेत्.—

Page 31.

Line 3. MSS write तूष्णीं, and एकाश्च गोधां.—11. All प्रीति°.—15. B कायश्च, P छायाश्च.—All शीताः.—

Page 32.

Line 10. All नावास्तुमे°.—12. MSS सहसैव.—14. MSS तं दृष्ट्वा and स्वयमेव.—

Page 33.

Line 18. A समुत्पतन्निव, B, P समुपन्नेव.—

Page 34.

Line 2. MSS निशाकरस्यैव.—4. All विरोध.—18. All कान्तित्वे°.—

Page 35.

Line 22. MSS तूष्णीं.—

Page 36.

Line 10. All स्वयमेव.—18. MSS °रूपता च.—

Page 37.

Line 17. MSS तेनेदम°.—

Page 38.

Line 1. All न चैवमा°.—20. MSS अनर्घः for अर्घः.—MSS एतद्दूरं.—

Page 40.

Line 18. MSS समेन —After 23. A समाप्तं for सप्तमम् —

Page 41.

Line 2. A °प्रसन्नो.—16. B, P निवासिनां.—23. All जनस्य ओजो.—

Page 42.

Line 2. MSS वाद्य.—6. All व्यावृतं.—7. यथयदद wanting in A and P; likewise काकाकाका in P.—देवेन्द्रेण° my reading for देवेन्द्रैर° of the MSS.—

Page 43.

Line 5. Perhaps to read देशे.—6. MSS °भ्युपेताः, with the correction भ्युपेयाः in A.—21. All स्तुतिम°.—

Page 44.

Line 1. A, P तया तया, B तया तया या.—9. MSS °विधज्व.—14. All अत्यन्न°.—15. B, P दीर्घपि°.—16. All चिपित.—17. B °धराकाराणि.—25. All परः.—

Page 45.

Line 1. MSS प्रत्यह°, but the metre requires a long syllable; प्रत्याहम् we find in Rāja-taraṃgiṇī (Calc. ed.) VII, 145 and 459.—21. All स्वयं.—

Page 47.

Line 1. MSS समीक्ष्यमाणा°.—12. All क्षमेयं.—

Page 48.

Line 24. MSS सावर्ण्यं.—

Page 49.

Line 8. All स्म for स्मस्.—

Page 50.

Line 2. MSS किम्वते°; cp. above at p. 28, l. 6.—11. A, B आदरस्त्वेष; P आदयस्त्वेषा.—

Page 51.

Line 3. पतत्रि my reading for पतत्र of the MSS.—13. All प्रशंस्यैनं.—15. MSS °जगामेति.—19. B यप्रोक्तं.—

Page 52.

Line 13. MSS प्रयामासु.—15. All प्रभूतावलेपं.—10. B व्याग (meant वेग) for जव.—

Page 53.

Line 7. ततो conjectural; A, B have तान्, P तां.—

Page 54.

Line 8. A एनम् for एवम्.—21. MSS °हृमेनं.—

Page 55.

Line 2. MSS निष्क्रियः.—21. MSS राजकुलायेति.—

Page 56.

Line 16. MSS किम्वत; cp. above at p. 28, l. 6 and p. 50, l. 2 —17. All पूजितुं, but B adds on the margin our reading.

Page 57.

Line 2. B, P दद्याद्दानं.—9. MSS यास्यति.—23. B second hand नृत्यानि.—

Page 58.

Line 12 A श्रत.—

Page 59.

Line 9. MSS तपोवना°.—A, B इति तयोरतेषाम°, B इति तेषाम°.—A, B वदतामध्वा°.—A गच्छतः ॥ श्रथा°, B गच्छतः तां ॥ अथा°, P गच्छतस्तां ॥ अथा°.—

Page 60.

Line 6. MSS प्राप्त for प्रान्त —

Page 61.

Line 3, seq. °कारेणान्ये, an emendation by Bohtlingk for °कारे नान्ये of the MSS.—11, sq. All स्नेहवेगा°.—21. All °भवतो.—

Page 62.

Line 12. MSS ससंभ्रमा°.—14. A निष्काशयितु°, P निष्काशयितु°.—

Page 63.

Line 3. MSS जालिनी.—5. All °दारयतीति.—7. A चाटकी.—19. B शीतानिल, P शीलानिल.—

Page 64.

Line 4. MSS नु for तु.—18. A, P. ह्रदन्ति.—21. All निवेदितानां.—

Page 66.

Line 16. A °सन्निभा यां, B °सन्निभां यां.—24. MSS विप्रकृष्ट.—

Page 67.

Line 7. All स्वयमेव.—17. MSS °ष्ठापयामासुरिति.—

Page 68.

Line 3. A सर्वभावं, B स्वभावं, omitting स.—10. MSS सरूढ°.—22. All °तन्त्रेव.—

Page 69.

Line 13. B असत्य°, P असत्व° and all °वृत्तैरनिवर्त्त° —23. MSS °मात्याः, परीच्यन्तां and निषेवन (*sic*).—25. A यज्ञस्यावभृथे.—

Page 70.

Line 6. मयार्हः my conjecture for मया of the MSS.—

Page 71.

Line 2. MSS तमन्वेत्य.—

Page 72.

Line 1. All दशः for यशः.—13. MSS संध्यापारे.—19. A प्रशमितानीता, B प्रशमितानित, P प्रशमिता नीलमां.—MSS ष्ठांपिता.—21. गात्रे न my reading for गात्रेण of the MSS.—All मन्दोद्यमाः, corrected by Bohtlingk.—

Page 73.

After the colophon the MSS give a *résumé* of the contents of the preceding ten Jātakas as follows ॥ उद्दानं ॥ व्याघ्री शिविः कौशलेशः श्रेष्ठिनौ शश एव च ॥ अगस्त्य-मांसदौ विश्वन्तर-यज्ञविदौ तथा ॥ ० ॥—

Page 74.

Line 2. All निषिक्त°.—8. All °मृश्यमाणा (*sic*).—10. °रोचेण.—16. Not clear whether अभ्यु° or अत्यु°.—18. MSS ज्वलितं.—21. MSS दारुणाः.—23. A, P मम, omitted in B.—

Page 75.

Line 2. B °ध्वनितो°, equally good.—

Page 76.

Line 7. A दृष्टापदाना, P दृष्ट्वाध्ययाना; in B by oversight a whole line omitted.—8. A, P दृतस्खलिताः, in B wanting.—°नुत्वा my conjecture for °तित्वा in A, रुत्वा in P.—10. MSS अपि सम्भाव्य°.—17. एव तु conjectural for एवंविधं in B, P, एवंवित in A, on the margin एवंविध.—22. MSS °यत्नेन आर्येण.—23. All हि for ह, but see Comm. on Dhammapada p. 126; Jātaka (Fausböll) I, 31; IV, 496; Theragāthā 35.—

Page 77.

Line 2. MSS अनुपाकृष्ट°.—8. सततं added conjecturally.—

Page 78.

Line 16. MSS अदृष्टैः for अदुष्टैः.—ब्राह्मणानां conjectural for ब्राह्मणयं of the MSS.—

Page 79.

Line 6. परिप्रकाशे conjectural reading for परिक्रोशे in A, P, परिक्रोशो in B.—7. All स्वस्थवदिव.—11. A, B रहोरनुपपत्तेः, P रहारपुनपपत्तेः.—22. All एव for एवं.—

Page 80.

Line 22. A अधर्म°, B, P अधर्म्म° for अधर्म्यं.—

Page 82.

Line 12. MSS विषक्त°.—

Page 83.

Line 2. All अनिमिषलोचनो.—17. च added by me.—

Page 84.

Line 4. MSS write कार्शेन.—

Page 85.

Line 1. A विघातैः.—4. MSS उपेक्षितं.—10. All समाप्नुयात्.—

Page 86.

Line 1. B विरुद्धं.—5. All भवति.—9. All अन्यल्लोके.—15. A तस्मिन्नतीव, but on the margin as in B, P and the printed text.—23. All repeat स्यात् after प्रतिगृह्णतः.—25. All °प्रणय°.—

Page 87.

Line 1. MSS add च before तव.—7. A रम्ये, B रंम्ये; the reading of P unknown owing to some lines having been omitted.—21. The Avagraha added by me.—At the end A, B °दशमं.—

Page 88.

Line 3. MSS एषां.—6, seq. All °तानिय° and °तिकानिमित्त:.—11. MSS इत्येवं.—12. The form Supāraga as a name of the wellknown seaport is wrong, but an error of the author himself. The Prākrit name of the city may have been Sūpāraka, Suppāraka, or °ga, but never Sūpāraga; cp. Pāli Suppāraka, Skr. Çūrpāra. The name of the man should be Supāraka = Supāra, though the author takes it to be *supāra + ga*, as appears from his words: *tasya paramasiddhayātratvāt*.—The sentence यदेतर्हि सुपारगमिति ज्ञायते,—the MSS have सु°—looks as if it were an interpolation.—

Page 90.

Line 5. All धैर्यात् and 11 अपधार्य, for which I read उप°, but अव° would do as well.—19. A हृता:.—23. All अनिलफेन.—

Page 91.

Line 15. All साधु:.—

Page 92.

Line 2. A वङ्गराग.—13. A, P समुपद्रुत्तमान्येव, B समुपरूत्तमान्येव; my reading conjectural.—19. All भयेश्चे°.—

Page 94.

Line 8. MSS आरोप्यतां.—A शीता पातपटविशेष (r. पोत°) इति, B, P सितानि इति. As vs. 10 the sails are compared to the wings of a Rājahamsī, we should expect a dual शीते. in which case the true reading would be आरोप्येतां. As to the word, cp. Jātaka IV, p. 21 (ed. Fausböll).—13. MSS वाभि°.—14. All °मानातमो°.—18. All वालिका: and l. 21 वालिका, but l. 16 वालुका:.—23. All °पूर्णा नौका.—

Page 95.

In the colophon A, B चतुर्दशमं, P चतुर्दशमो.—6. All कारण्डचक्र°.—8. MSS परमार्थ°.—17. All विकल्यात्.—21. All गतेनेव —

Page 97.

Line 4. MSS धरण्या.—

Page 98.

In the colophon A, P °दशमं. P °दशमो —7. MSS °यतन. and आलक्ष्य°.—9. All समाता° and °गूढ.—

Page 99.

Line 21. MSS विवर्द्ध° —

Page 100.

After l. 8. A, B षोडशमं.—In P the next following Jātaka is the कच्छपजातक; s. Appendix.—

Page 101.

Line 1. B पापं, P पापा —

Page 102.

Line 7. MSS विनिमयं —19. All नृत्तेत् for नृत्येत्.—

Page 103.

Line 7. A दृष्ट्वान्धका, B विवन्धका, P कष्णान्धका.—12. All जल°.—18. एतं my reading for इमं of the MSS.—22. All पद्धतीं —

Page 105.

Line 8. A, P लोकावहित:.—A, B सप्तदशमं, P अष्टादशो ऽध्याय:.—21. All °मर्षात्.—

Page 106.

Line 14. MSS °श्रयेनैव.—24. All तवेक्ष्यमाणा.—

Page 107.

Line 1. All निरसंस्त्व° —

Page 108.

Line 16. A first hand °प्यन्तोरने. B °प्यन्तावने. P °प्यतोरमेहं —18. MSS सबहुमानम्, perhaps intended for स्वबहुमानम्, which reading would be better than that adopted by me in the text.—After 22. A, B अष्टादशमं, P उनविंशतिमो ऽध्याय:.—Then the MSS have: प्रविवेकमुखर

(evidently the first words of the following Jātaka) धगित्यपुत्राख्यजातकं (A °वशि° for °धगि°) । षष्टि श्लोकास्त्रिभिर्न्यूना वर्णानां विंशतिस्तथा ॥.—

Page 109.

Line 17. All °वसितव्यं.—24. A, P °ताद्वरेण, B ताद्वारेण —

Page 110.

Line 5. MSS प्रव्रज्याम.—12. All तापसः.—15. MSS °वनम°.—16. MSS सचिःसुत्य.—

Page 112.

Line 6. MSS दद्दृशुश्चैनं.—18. All मालां and °मृष्टां, which I ought to have left.—

Page 113.

Line 8. चतुःशत is a mistake of the author himself; the parallel passage in Pāli has *catussada*, to which would answer a Skr. चतुरुत्सद.—9. अपि conjecturally added by me.—12. MSS लब्ध्वा —

Page 114.

Line 1. A प्राणशतैः.—16. All कुत्सयध्वं.

Page 115.

Line 10. MSS °धार्त्यं.—14. All च्माप्यामास.—16. A first hand नो, sec. hand मे for तद्.—17. MSS स्खलितं, admissible. 20. All विवेक, but see the beginning of the J.—21. The words in brackets have their counterpart in the Pāli redaction of the tale, where the addition is necessary according to the rule that at the end of the Jātaka the incident in hand is connected with the tale related in illustration of it. Such a rule, however, does not apply to the Skr. redaction by Çūra. I therefore suppose that the lines have been added by another hand.—

Page 116.

After l. 2. A, B °विंशतिमं, P विंशतिमो ऽध्यायः.—Then follows: सूरिभिर्गणितं सम्यग्विसजातकमादरात् । षट्श्लोकोनं शतं विंशं वर्णाद्वादशकं तथा (A °दशस्तथा, B °दस्तथा).—4. MSS प्रततितव्यं.—13. All प्रस्तावागतां.—17. It would seem preferable to read दुर्लभो य.—

Page 117.

Line 2. तस्य वै conjectural reading for तस्यैव in A, तस्य मे in B, P.—B कुतः, not bad.—3. MSS चोप°.—10. All क्रमः.—16. MSS °सम्बन्धात्.—

Page 118.

Line 7. MSS °ण्यैनां.—9. All व for च. —13. A प्रतो°.—

Page 119.

Line 9, seq. MSS °पादनवि°, admissible. —11. B second hand प्रयस्ता, A प्रयत्ना.—18. MSS °मर्ष°.—21. A अर्हो for युक्तो, but on the margin the latter.—24. B कृतानुज्ञ°.—A तत्र एव, B तत्रैव.—B तपोवनाय.—

Page 120.

Line 1 and 3. ईयुः conjectural reading for ईयुः of the MSS.—6. MSS °समाप्त्यायाज्ञया, a substantive आयाज्ञा being unknown, the true r. will be °समाप्तियाज्ञया.—8. All प्रायच्छन्त, and A on the margin प्रायतन्त, admissible.—

Page 121.

Line 6. All अयं स्थितो.—14. All प्रसह्यं. —20. MSS उपेत्येयं, which points to a confusion of two readings· उन्नेयं and उपनेयं.—After 20. A, B विंशतिमं, P एकविंशतिमो.—Then follows: द्वितीयश्लोकमधिकं वर्णितं श्रेष्ठिजातकं । तच्छ्लोकानां शतं ग्राह्यं त्रिभिर्न्यूनं मनीषिभिः । शतानि सप्त संख्या (!) द्वितीया दृश्यते दशत (P °ते) । (r. तो, which syllable belongs to संख्या) अष्टाशीतिरथान्या च वर्णानाम्पञ्चविंशतिः ॥ उद्धानं ॥ शक्रद्विजोन्मादयन्तीसुपारगजलोद्भवाः । पक्षिकुम्भेत्यतनयास्तापश्रेष्ठिनो तथा ॥.—

Page 122.

Line 16. All भवत्या.—

Page 123.

Line 10. All मूलमुप°, quite nonsensical, but my conjecture in the text is hardly the true reading; the author probably wrote मूलमुपशोभयमाना; cp. p. 185, l. 21.—

Page 124.

Line 8. MSS उपाक्रोश.—12. MSS °राज्ञो ऽअपितु.—14. All प्रपद्येयं.—18. B तदुपाय.—19. All गच्छतेनां.—A प्रवेशयेत्, B, P प्रवेशयेत.—

Page 127.

Line 19. MSS °शंसा.—The title of this Jāt. in the MSS, बुद्धबोधि, is meaningless; the corresponding Pāli Jāt. is called *Culla-bodhi*, in Cariyā-Piṭaka *Cūla-bodhi*, in contradistinction with *Mahā-bodhi*. I have therefore changed *buddha* into *cuḍḍa*, i. e. *culla*, though *khuḍḍa* would do as well.—The number is एकविंशतितमं in A, एकविंशतमं in B, द्वाविंशतीत्तमो in P.—

Page 128.

Line 4. MSS विविध, A adding on the margin भाव, which I take to be a misread भार, meant as a gloss to विवध; here, however, विवध is not synonymous with भार, but with मार्ग.—18. A only once सुमुखस्य.—

Page 129.

Line 9. B अतिरत.—12. MSS °क्रष्येयेतां.—16. MSS मानसरसः.—20. A इवोत्पत्तैः, B इवोत्पतैः.—

Page 131.

Line 2. All समुपचितस्य.—9. B वह्निकलाप.—15. MSS समुत्पत्य.—All ततस्य.—16. MSS °पतिस्तेना° and निवर्यं.—20. MSS शङ्कास्तद°.—23. All °कारं.—

Page 132.

Line 1. All केचि° and परिहीयन्ते—4. MSS वासिता°—11. MSS या for वा.—13. तारा omitted in A. The reading of the MSS as given in the text cannot be right, I suppose the author wrote °विभूषणारजन्यां.—21. तस्य wanting in B.—22. A, P सरसि, B सरस्व, which points to a reading सरसश्च.—

Page 133.

Line 3. MSS गणं.—11. B विरुत.—13. All दिवः.—18. All गच्छैवं.—

Page 136.

Line 2. ते my addition.—

Page 137.

Line 7. MSS नेद॑न्यात् and हंसयूथं.—22. All निष्क्रियं—

Page 138.

Line 3. All विहगाधिपते°.—10. MSS पराद्ध्या°—16. All उच्चक्वसतीव.—19. MSS उपधासु शक्ते°.—22. All शोभं.—

Page 139.

Line 17. All °तागमयोः, either °तागमनयोः or the reading adopted in the printed text is required.—

Page 140.

Line 16. MSS प्रहर्ष° without स.—22. All विस्रम्भमजयं; grammatical would be विस्रम्भस्व.—

Page 141.

Line 3. MSS °लम्बेत.—9. A and second hand B सुखी.—13. MSS सन्तति.—

Page 142.

Line 1. A समुत्पेत्य, B, P समुत्पत्य.—9. All स्थविर आर्या°.—After 10. P त्रयोविंशतिमो.—14. MSS क्रमतायामो.—15. MSS च कलासु च; I think the author wrote °लश्च चित्रासु कलासु.—

Page 143.

Line 9. All विचचन्ति.—12. A and

second hand B अति for अभि.—19. MSS °मुख्यतां.—24. All °गृह्यतेति.—

Page 144.

Line 20. MSS °राज अ°, a manner of writing more logical than the common one, but disregarded by me because the MSS are not consistent in it.—

Page 145.

Line 6. MSS °राज अस°.—19. A, P चाभ्युप°.—All सेवनाच्च.—24. All °सन्निवे-शस्येति ।.—25. MSS seem to have सा-कल्पे.—All अपि.—

Page 146.

Line 1. All पश्येम इ°.—6. Probably to read पञ्च चाभि°.—9. All केशल.—18. B पूर्वकृतं.—

Page 147.

Line 22. A and second hand B प्रति-द्वारां.—

Page 148.

Line 13. MSS मतिरहो.—16. All °नान् संरब्ध.—20. All परस्य को°.—22. A first hand अमात्यम् for आमन्त्र्य.—24. वि my addition.—

Page 149.

Line 21. All °भावाननु°.—24. All एवं for एव.—

Page 151.

Line 1. MSS पूर्वकर्मकृत°.—

Page 152.

Line 12. MSS अथोद्धृत्य, but not quite distinct.—17. A second hand तु for न.—सुखेन is strange; perhaps to read मुखेन = उपाय, i. e. means.—23. All omit स before राजिकां.—

Page 153.

Line 8. All यं न.—

Page 154.

Line 10. MSS सर्वोष°.—

Page 155.

Line 4. A चमाभ्यासा°.—After 8. A, B त्रयोविंशतिमं, P चतुर्विंशतितमः.—Then follows: महाबोधिविंशतितः प्रतिवर्णं यश-स्विभिः । एकः श्लोकशते द्वे च वर्णानां सप्तक-द्वयं ॥.—18. All, except A on the margin सादिवना.—

Page 156.

Line 18. MSS कान्तारगिरिदुर्गे.—

Page 157.

Line 25. A, B °भाव°.—

Page 158.

Line 9. MSS भाराभि°.—11. A first hand and B खेद.—

Page 159.

Line 1. A on the margin भव्यो निसर्ग वा पाठः.—24. A सौतोर, B सौधोर; in P some lines wanting.—

Page 160.

Line 8. MSS निर्मीलित°.—

Page 161.

Line 6. All °दण्डनिर्भत्सन°.—8. MSS °सः को°.—21. All चरितां.—

Page 162.

Line 5. All सिद्धि.—Colophon P पं-चविंशतितमं.—Then follows: प्रतिवर्णं विग-णितं सम्यग्वानरजातकं । दशोत्तरं श्लोकशतं वर्ण-त्रिकसमन्वितं ॥.—

Page 163.

Line 17. All न चैवं.—

Page 164.

Line 8. MSS निर्घात.—12. All विन-याभियात°.—19. All एमि.—22. MSS द्र-ष्टापदाने, admissible.—

Page 165.

Line 9. All शिरया.—

Page 166.

Line 1. MSS °सत्वो विनय°.—19. All दृढ.

Page 167.

In the colophon A and B पञ्चविंश-तिमं, P षड्विंशतितमः.—Then the MSS

have: एकोनाशीतिरन्यच्च वर्णानां पञ्चकद्वयं । सूत्रञ्चेतावतीं संख्यां समाप्तः शरभस्त्वयं ॥.—5. MSS तिनिष —10. All वेदुयं.—15. All विचरितानि.—

Page 168.

Line 2. MSS वत्सला.—3. All विलम्बयितुम्.—4. MSS क्वचिदयं.—9. All सलिलोचेन.—11. All विलोपयन् —17. B first hand and P °दुःख:.—21. Read सामुख्येन.—

Page 169.

Line 11. MSS निवेद्य:.—13. MSS हृदयानि । इति.—19. All ईचते.—

Page 170.

Line 1. MSS सा विस्मया°.—21. MSS गुणाम्य°, intended, perhaps, for गुणान्य°.—24. All आयतीमिति.—

Page 171.

Line 8. All हस्ताचापो.—

Page 173.

Line 1. MSS निर्भत्सन.—11. All उपेयिवान्; अभि my addition.—16. MSS तेनैवम्.—B गिर:.—25 MSS इहा.—A, P संगमनं.—

Page 175.

Line 6. MSS दत्तवानिति —After 9. A, B षड्विंशतिमं, P सप्तविंशतितम:.—Then follows. प्रत्यक्षरं श्लोकशतं गणितं रुरुजातकं । एकाश्चत्रिंशदन्ये च श्लोका वर्णास्त्रयस्तथा ॥.—10. MSS °नुवृत्तिन:.—19. All निःश्रित्य.—

Page 176.

Line 6. MSS °पत्र.—20. A तस्याकुलित°.

Page 177.

Line 6. A, B °सज्जनेन.—11. MSS ईचमाणं.—14. MSS अभि for अति.—16. A व्याधृते°, B, P व्यावृते°.—20. A, B सज्जचाप°.—All °वभर्तसन°.—21. All परमदुर्ग° and °कामा:.—24. MSS भयविषरस°.—

Page 178.

Line 7. MSS कृपयाति°.—20. All तं दृष्ट्वा.—22. All ईच्यमाणा:.—

Page 179.

Line 1 अथ: only in P.—2. All प्रच्छिद्यतामिति.—13. All °भाव:.—

Page 180.

Line 3. MSS °यूथ:.—8. All निःश्रित्य.—

Page 181.

Line 5. All द्विजातान्.—13. यथा my addition.—In the colophon A, B सप्तविंशतिमं P अष्टाविंशतितम: —Then follows एषा निगद्यते (संख्या) संख्यायैकैकमक्षरं । कपिराज्जातकं (*sic*) श्लोकं शतमेकादशोत्तरं ॥.—21. MSS गृहावासं.—

Page 182.

Line 6. MSS °कथान्त्र° and तं for तत्.—25. All °स्मितत्रास°.—

Page 183.

Line 2. P शनिलं°, A सलिलं°, but on the margin ललितंवा पाठ:.—3. MSS °देशेष्वविष° —21. All नेनांस्ततो.—

Page 184.

Line 14. MSS निस्पृह:.—16. All वपुर्गुणस्य.—

Page 185.

Line 8. MSS °तिशय without Visarga.—

Page 186.

Line 5. MSS वैवर्णवेपथुभ्रू°.—7. All °मदन्.—8. A भम्भो, B हम्भो, and all Avagraha instead of अ°.—14. All भोश्चिरात्.—19. A, P संपन्न°, B सपन्न°.—

Page 187.

Line 3. A, P °वृणवन्त्य, B °वृणयन्त्य.—6. A, B °वगतो°.—9. All एवं for एव —10. A °दृष्टो for °तृष्णां, pointing to a reading °तृष्टो.—24. A निष्क्रित्य, B, P निष्कृत्य.—

Page 188.

Line 2. All संरम्भतरम्.—8. A, B इष्टं.—9. A on the margin and P अव° for अप°, equally good.—11. A, B उपचित

for उचित.—16. MSS प्रकाश्यते; the Avagraha my addition.—21. MSS अतिप्रयन्ते.—25. All क्रियान् for कियान्.—6. A अत्युदिता.—

Page 190.

Line 22. A, B चमापमाणाः, A second hand चमायमाणाः.—

Page 191.

Line 17. All तितिच्चं.—20. All समुपनीय.—21. A, B अवच°.—

Page 192.

Line 1. A सम्पादमित्यता, B सम्पादननित्यता; these syllables omitted in P.—After 2. A, B अष्टाविंशतिमं, P उनत्रिंशतिमः.—Then follows: श्लोकचतुष्टयसहितं श्लोकानां सप्ततं शतं। क्षान्तिवर्णा विंशतिरपरे द्विकयुक्ता नात्र सन्देहः ॥ —10. B °भूतां.—All उत्कृष्टा°.—16. MSS अश्राद्धा°.—20. All °श्रया and °श्रद्धता.—

Page 193.

Line 14. B, P महर्षे.—15. MSS °विपद्यमान°.—16. A, B °दीप्तेः.—21. All आमास्ति माहा°.—

Page 195.

Line 8. अहम् added by me.—15. तावद्विध is unknown from elsewhere, at least to me; तादृग्विध would equally suit the metre.—24. A स्वचप्र°, B स्त्रबन्ध°.—

Page 196.

Line 3. All आनच.—6. All न च यान्ति.—14. MSS निसृजन्ति.—15. All कणठक, as in Pāli, and 17 ऊर्द्ध°.—20. MSS विस्पन्दना°.—

Page 197.

Line 19. MSS कडेवर, remarkable because the Pāli word has the dental *l*.—23. All यञ्चा°.—

Page 198.

Line 6. MSS °दार्यमाणशतार्त्ति°; my reading conjectural.—8. MSS तुदेत्.—19. All ऋजु°.—22. MSS विवक्तुः.—

Page 200.

After l. 3. A, B एकोनत्रिंशत्तमः (*sic*), P त्रिंशतितमः.—Then follows: पञ्चविंशश तं ब्रह्म वर्णानां पञ्चविंशतिः। इति प्रसभमाचार्यैरजस्रं ख्याप्यमुच्चकैः ॥.—17. All स्वपूण्य°.—20. MSS अनोजस्को.—

Page 201.

Line 13. All except second hand A कुत्र भवन्तः.—16. MSS वाभिगताः.—17. B मानुष्येणा°.—

Page 202.

Line 7. All प्रावर्तयन्त.—8. B first hand चैतान्.—12. ये my reading for वा of the MSS.—17. All योजनायातं; °नायतं would do.—

Page 203.

Line 11. A जलाश्रयः.—All वै for वा.—16. MSS °मित्यथ and 20 सरस्तद°—22. A, B आदाया, P अहाय for आनीय.—23. MSS °तव्यमेव.—24. MSS °यास्ययेति। तद्गच्छत यूयमनेन मार्गेणेति.—

Page 204.

Line 1. B °णावेचया.—11. MSS ताचस्य.—16. °लतां.—23. MSS °विकर्षेणा त°; possible would be °विकर्षिणा.—

Page 205.

Line 1. All व्यहासयन्ध्यां and 2 विभू° for व्यभू°.—4. MSS °विक्रमः.—9. All शितादि, but cp. 206, 10.—14. MSS °णावेचया and 23 °धनं.—

Page 206.

Line 3. MSS चास्य.—6. All सोदत्सताम°.—14. All °मित्यथ.—15. MSS गर्गराय° and 16 °वेद्यमाणा.—24. को न्वस्य my reading for कामास्य of the MSS.—

Page 207.

Line 5. MSS °वेचया.—8. All °येयुरिति ॥.—11. प्र wanting after भद्रा in all.—

16. MSS निर्दर्शयि°.—After 17. P एकत्रिंशतितमः.—Then follows: द्वाविंशश्लोकशतं वर्णाः सप्तेति गृह्यतां हस्तौ । ग्रन्थान्वेषणमतिभिः पूज्यैर्दुधापथं त्यक्त्वा ॥ Then the summary. उद्दानं ॥ बोधिहंसो महाबोधिवानरः शरभो रुरुः । कपिराट् क्षान्तिवादी च ब्रह्म हस्ती च ते दश: (*sic*) ॥.—20. A, B प्रसंसात्, P प्रसंगात्.—22. A सुगतस्य for सुतस्य; in P some syllables wanting.—

Page 208.

Line 2. A लोकानां लोके, B लोके लोकानां लोके, P लो, the rest wanting. My reading conjectural.—11. MSS विद्वत्तयासु°; the insertion of च would do as well as that of तु.—16. परभृत wanting in B, P.—18. All अन्यतमदु°.—23. MSS ललिता°.—24. च added by me.—

Page 209.

Line 2. MSS कृतोपकार°.—11. All इवेत एवा°.—17. All संवृत्ताः.—19. One would rather expect स्वयं than स्वं.—21. All सपौरानेव.—

Page 210.

Line 12. B यद् for तद्.—All यथाकार°.—13. MSS आगगार°.—14. A, B मार्गमावरण°, P मार्ष्टमावरण°.—15. MSS °कर without Anusvāra.—16. A, B पटु.—All विनियत.—17. All वर्मार्ण.—19. All एवानिवर्तस्वा कि°.—25. MSS °हर्षापलेपं.—

Pagn 211.

Line 3. MSS कडेवरा°.—9. MSS °प्रतीक्षण°.—10. B, P कस्त्वं for कष्टं.—22, seq. All कम्पत इति.—

Page 212.

Line 22. A second hand and P प्रतिज्ञात for प्रतिपन्न.—23. MSS अयं for अहम्.—

Page 213.

Line 13. All विकम्पित for विकल्पित.—17. B सुभूत°.—

Page 214.

Line 11. A निःक्रियं, B निःक्रयं, P निक्रयं—15. All परमज्ञ.—20. All °संसतेरप्यप्रतिहर्ष°.—

Page 215.

Line 12. MSS °मार्ग वेदविदित, and तेन for तव.—17. MSS तद् for त्वद्—22. A सजन°, with double correction सु and स्व, P सुजन°.—

Page 216.

Line 9. All इति for अति.—

Page 217.

Line 1. B चितान्मत्स, A चितापि and चितात्मे.—8. A, B originally °भाषितस्य.—

Page 218.

Line 13. A, B गुणातिशयाः—B, P संक्षेपतस्तु.—21. MSS देन्यार्पणा.—25. B प्रतिकारा°.—

Page 219.

Line 1. B पुरुषाः without का.—8. A first hand and P विचिन्त्याविधि, B विचिन्त्यधि च.—24. A, B त्वद्विधे.—

Page 220.

Line 2. MSS अतिवृद्धं.—5. All °गतवेगं.—8. A धर्मं, B धर्म.—16. गम्भीरेण omitted in A, P.—18. All °पनीतं, and 19 ईदयते.—24. तत् before समीपगं added by me.

Page 221.

Line 4. A यथा for रथा, and first hand नराणां.—16. ते my addition.—24. A first hand P तत्तर्हि.—

Page 222.

Line 9. वर my addition.—12. आह is here the interjection.—17. धृतो my reading for वृतो of the MSS.—23. All निरता for नीचता.—

Page 223.

Line 17. All गर्गरायमान°.—

